KÂVYAMÂLÂ. 63.

# THE SÂHITYAKAUMUDÎ

OF

## VIDYÂBHÛSHAṆA.

WITH THE KRISHṆÂNANDINÎ COMMENTARY.

---

EDITED BY

MAHÂMAHOPÂDHYÂYA PAṆḌIT S'IVADATTA,
Head Paṇḍit and Superintendent, Sanskṛit Department,
Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJI DÂDÂJI'S "NIRṆAYA-SÂGARA" PRESS.

BOMAY.

---

1897.

---

*Price 1½ Rupee.*

काव्यमाला. ६३.

श्रीविद्याभूषणविरचिता

# साहित्यकौमुदी ।

कृष्णानन्दिन्याख्यव्याख्यासंवलिता ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधिता ।

सा च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीता ।

१८९७



मूल्यं सार्धो रूप्यकः ।

# साहित्यकौमुदीकर्ता
# विद्याभूषणः ।

अस्य श्री**विद्याभूषण**पण्डितस्य निवासकालादिविषये नास्माभिः स्वमत्या किंचिदपि लिख्यते. किंतु राजपूतानान्तर्गत**करोली**नगराधीशयादवकुलभूषणश्री**भ्रमरपा-ल**महाराजसमाश्रितभरद्वाजगोत्रोत्पन्न**गोविन्दप्रसाद**मुखोपाध्यायतनयश्रीयुत**गिरि-वरप्रसाद**शास्त्रिभिः पूर्वं **विष्णुप्रिया**नामकवङ्गभाषामासिकपत्रिकायां **रास-विहारीदास**सांख्यतीर्थलिखितं **विद्याभूषण**जीवनवृत्तं सप्रमाणीकृत्यास्माकं पार्श्वे प्रेषितमिति तेषां धन्यवादानसंख्यानुद्घोषयामः. एतन्महाशयप्रेषितविद्याभूषणजीवन-चरित्रस्यातीव विस्तृतत्वात्ततोऽपि सारोऽस्माभिः संगृहीतः.

अयं **विद्याभूषण**नाम्ना प्रसिद्धो **बलदेव**नामा वैङ्गदेशीयद्विजकुलभूषणं वैष्ण-वसंप्रदायान्तर्गतश्रीचैतन्यमहाप्रभुर्भक्तस्तदीयमतपोषकः श्रीदामोदरदासशिष्य उद्धव-दासगुरुर्बहून्ग्रन्थान्रचयामास. तेषां प्रायो मङ्गलादिश्लोकाः प्रदर्श्यन्ते—

---

१. 'शाके षट्सप्तति(१४७६)मिते पूर्णेयं टिप्पणी शुभा । संक्षिप्ता युगशून्याग्रपञ्चैक-(१५०४)गणिते तथा ॥' इति समाप्तिश्लोकज्ञातकालायाः श्रीसनातनगोस्वामिनिर्मित-दशमस्कन्धबृहत्तोषणीसारभूतजीवगोस्वामिनिर्मितलघुतोषण्याः प्रारम्भे—'भट्टाचार्यं सार्वभौमं विद्यावाचस्पतीन्गुरून् । वन्दे विद्याभूषणं च गौडदेशविभूषणम् ॥' इति वन्दितो विद्याभूषणस्त्वितोऽत्यन्तं प्राचीनो भिन्न एव, गोविन्दभाष्यपीठकप्रारम्भेऽनेन विद्याभूषणपदभूषितबलदेवविदुषा—'गोविन्दाभिधमन्दिराश्रितपदं हस्तस्थरत्नादिव-त्तत्वं तत्त्वविदुत्तमौ क्षितितले यौ दर्शयांचक्रतुः । मायावाहमहान्धकारपटलीसत्पुष्प-वन्तौ सदा तौ श्रीरूपसनातनौ विरचिताश्चर्यौ सुवर्यौ स्तुमः ॥' इति श्लोके सनातन-गोस्वामिनः स्तुतिविषयतया व्याख्यातत्वात्. २. 'अथ सोऽयं श्रीगोविन्दैकान्ती बल-देवापराख्यो विद्याभूषणो ब्रह्मसूत्रेषु गोविन्दभाष्याभिधानं विवरणं निर्माय तत्पो-षाय सिद्धान्तरत्नाख्यं तत्पीठकं निर्मातुकामः साक्षाद्भगवतोर्चायमानस्य श्रीश्यामसु-न्दरस्य भक्तिं मङ्गलमाचरति' इति पीठकप्रारम्भे दृश्यमानत्वात्. ३. सर्वेषां वङ्गानामै-तिह्यात्. ४. स्वकीयग्रन्थेषु प्रायश्चैतन्यदेवस्यैव स्मरणात्. ५. प्रकृतग्रन्थसमासश्लोक-व्याख्याने स्फुटमुपलभ्यते. ६. 'श्रीमान्नारायणो ब्रह्मा नारदो व्यास एव च । श्रीलमध्वः पद्मनाभो नृहरिर्माधवस्तथा ॥ अक्षोभ्यो जयतीर्थश्च ज्ञानसिन्धुर्महानिधिः । विद्यानि-धिश्च राजेन्द्रो जयधर्ममुनिस्तथा ॥ पुरुषोत्तमश्च ब्रह्मण्यो व्यासतीर्थमुनिस्तथा । श्रीमां-ल्लक्ष्मीपतिः श्रीमान्माधवेन्द्रपुरीश्वरः ॥ ततः श्रीकृष्णचैतन्यः प्रेमकल्पद्रुमो भुवि । श्रीमद्गौ-रदाससंज्ञः पण्डितः ख्यातभूतलः ॥ हृदयानन्दचैतन्यः श्रीश्यामानन्दविग्रहः । रसिकान-न्दगोस्वामी नयनानन्ददेवकः ॥ राधादामोदरो देवो श्रीविद्याभूषणात्मकः । एषां पादसरो-जानि ध्यायत्युद्धवदासकः ॥' इत्यु**द्धवदास**कृतोपासनापद्धतिनामकग्रन्थादवसीयते.

१. कान्तिमाला (प्रमेयरत्नावलीटीका)—

प्रारम्भे—

'गौडोदयमुपयातस्तमः समस्तं निहन्ति यो युगपत् ।
ज्योतिश्चयोऽतिशीतः पीतस्तमुपास्महे कृताञ्जलयः ॥'

समाप्तौ—

'वेदान्तवागीश[1]कृतप्रकाशा प्रमेयरत्नावलिकान्तिमाला ।
गोविन्दपादाम्बुजभक्तिभाजां भूयात्सतां लोचनरोचनीयम् ॥'

२. काव्यकौस्तुभमङ्गलाचरणम्—

'कलाभिर्निर्भृतः श्रीमान्राधया समलंकृतः ।
दीव्यत्कुवलयः सोऽयं विधुर्विजयतेतराम् ॥'

३. कृष्णानन्दिनी (साहित्यकौमुदीटीका)—मुद्रितैव.

४. गीताभूषणम् (गीताभाष्यम्)—

'श्रीमद्गीताभूषणं नाम भाष्यं यत्नाद्विद्याभूषणेनोपचीर्णम् ।
श्रीगोविन्दप्रेममाधुर्यलुब्धाः कारुण्यार्द्राः साधवः शोधयध्वम् ॥'

५. गोपालतापनीभाष्यम्—

प्रारम्भे—

'शक्त्यानन्ताचिन्त्यशक्त्येकपक्षे सर्वाध्यक्षे भक्तरक्षातिदक्षे ।
श्रीगोविन्दे विश्वसर्गादिकन्दे पूर्णानन्दे नित्यमास्तां रतिर्नः ॥
स[2]नातनं रूपमिहोपदर्शयन्नानन्दसिन्धुं परितः प्रवर्धयन् ।
अन्तस्तमस्तोमहरः स राजतां चै[3]तन्यरूपो विधुरद्भुतोदयः ॥
गोपालतापनीं नौमि या कृष्णं स्वयमीश्वरम् ।
करस्थरत्नसंकाशं संदर्शयति सद्धियः ॥'

समाप्तौ—

'विद्याभूषणभणितं श्रीमद्गोपालतापनीभाष्यम् ।
तोषयतु बल्लवीनां मित्रं गोपालकं परं ब्रह्म ॥'

६. गोविन्दभाष्यम् (ब्रह्मसूत्राणाम्)—

प्रारम्भे—

'सत्यं ज्ञानमनन्तं ब्रह्म शिवादिस्तुतं भजद्रूपम् ।
गोविन्दं तमचिन्त्यं हेतुमदोषं नमस्यामः ॥'

---

१. 'वेदान्तवागीश' इति नामापि तेन लब्धं स्यात्. २. 'सनातनगोस्वामिनं रूपगोस्वामिनं सनातनरूपं वा. ३. चैतन्यावताररूपोऽज्ञानाभावरूपो वा.

७. गोविन्दभाष्यटीका (सूक्ष्माभिधाना)—

प्रारम्भे—

'नित्यं निवसतु हृदये चैतन्यात्मा मुरारिर्नः ।
निरवद्यो निर्वृतिमान्गजपतिरनुकम्पया यस्य ॥
भाष्यं यस्य निदेशाद्रचितं विद्याभूषणेनेदम् ।
गोविन्दः स परात्मा मयापि(?) सूक्ष्मं करोत्वस्मिन् ॥
आम्नायमूर्धरसिकाः कृष्णपदाम्भोरुहासक्ताः ।
सन्तः करुणावन्तो मयि प्रसादं वितन्वतामनिशम् ॥'

समाप्तौ—

'श्रुत्यादिवाच्यमणिदीधितिदीप्यमानां
सद्युक्तिकाञ्चनरुचिच्छटया मनोज्ञाम् ।
वाणीश्वरोक्तिमनुचिन्त्य बुधाः सुधाभां
गोविन्दभाष्यमसकृत्परिपाठयध्वम् ॥'

८. गोविन्दभाष्यपीठकम् (सिद्धान्तरत्नाभिधम्)—

प्रारम्भे—

'विद्यारूपं भूषणं मे प्रदाय ख्यातिं निन्ये तेन यो मामुदारः ।
श्रीगोविन्दः स्वप्ननिर्दिष्टभाष्यो राधाबन्धुर्बन्धुरागः स जीयात् ॥
गजपतिरनुकम्पासंपदा यस्य सद्यः
समजनि निरवद्यः सान्द्रमानन्दमिच्छन् ।
निवसतु मम तस्मिन्कृष्णचैतन्यरूपे
मतिरतिमधुरिम्णा दीप्यमाने मुरारौ ॥

अथ सोऽयं श्रीगोविन्दैकान्ती बलदेवापराख्यो विद्याभूषणो ब्रह्मसूत्रेषु गोविन्दभाष्याभिधानं विवरणं निर्माय—'

समाप्तौ—

'यद्ब्रह्मसूत्रेषु विभाति भाष्यं कृष्णात्मकं व्यक्तमवप्रमेयम् ।
तस्योपदेशाय सुवर्णपीठसिद्धान्तरत्नं न भवेत्किमेतत् ॥
सिद्धान्तरत्नकिरणात्किल भाष्यचन्द्रा-
दद्वैतशार्वरहरादमलप्रकाशात् ।
दृष्टं न किंचिदिति तत्त्वमुदग्रधीभिः
श्रीमन्मुरारिचरणाम्बुजभक्तिभाग्भिः ॥
विजयन्ते श्रीराधादामोदरपादपङ्कजद्युतयः ।
याभिः सकृदुदिताभिर्विनिर्मितो मे महान्मोदः ॥'

९. गोविन्दभाष्यपीठकटीका—

प्रारम्भे—

'आलस्यादप्रवृत्तिः स्यात्पुंसां यद्ग्रन्थविस्तरे ।
सिद्धान्तरत्ने संक्षेपाट्टिप्पणी क्रियतेऽत्र तत् ॥

अथ सोयऽमित्यादि ॥'

समाप्तौ—

'राधादामोदरः कान्यकुब्जविप्रावतंसः स्वस्य मन्त्रोपदेष्टा महत्तमो विद्वदग्रणीस्तस्य पादपङ्कजयुतयः । पक्षे—राधाकृष्णस्य ॥'

१०. छन्दःकौस्तुभभाष्यम्—[1]

प्रारम्भे—

'अर्चितनयनानन्दो राधादामोदरो गुरुर्जीयात् ।
विवृणोमि यस्य कृपया छन्दःकौस्तुभमहं मितवाक् ॥
श्रीराधादामोदरशिष्यो विद्याभूषणो नाम्ना ।
छन्दःकौस्तुभशास्त्रे भाष्यमिदं संप्रति व्यदधात् ॥'

११. दशोपनिषद्भाष्यम्.

१२. नामार्थसुधा (सहस्रनामभाष्यरूपा)—

'विद्याभूषणभणितं नामार्थसुधाभिधं भाष्यम् ।
सद्भिर्नाम पुमर्थैः कृपया परिशोधयध्वम् ॥'

१३. प्रमेयरत्नावली—

प्रारम्भे—

'जयति श्रीगोविन्दो गोपीनाथः स मदनगोपालः ।
वक्ष्यामि यस्य कृपया प्रमेयरत्नावलीं सूक्ष्माम् ॥
भक्त्याभासेनापि तोषं दधाने धर्माध्यक्षे विश्वनिस्तारनाम्नि ।
नित्यानन्दाद्वैतचैतन्यरूपे तत्त्वे तस्मिन्नित्यमास्तां रतिर्नः ॥
श्रीमन्मध्वमते हरिः परतमः सत्यं जगत्तत्त्वतो
भेदो जीवगणा हरेरनुचरा नीचोच्चभावं गताः ।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनं
प्रत्यक्षादित्रयं प्रमाणमखिलाम्नायैकवेद्यो हरिः ॥'

१४. भागवतटीका (वैष्णवी)—वृन्दावने समुपलभ्यते.

१५. लघुभागवतामृतटीका (सारङ्गरङ्गदा).

१६. साहित्यकौमुदी—मुद्रितैव.

---

१. अयं छन्दःकौस्तुभः स्वकीयगुरुर्वेदान्तस्यमन्तकनिर्मातृश्रीराधादामोदरनिर्मित एव.

१७. सिद्धान्तदर्पणः—

प्रारम्भे—

'नित्यं निवसतु हृदये चैतन्यात्मा मुरारिर्नः ।
निरवद्यो निर्वृतिमान्गजपतिरनुकम्पया यस्य ॥
पिता पराशरो यस्य शुकदेवस्य यः पिता ।
तं व्यासं बदरीवासं कृष्णद्वैपायनं भजे ॥'

समाप्तौ—

'सद्युक्तिभूषणव्राते विद्याभूषणनिर्मिते ।
सिद्धान्तदर्पणे वाञ्छा सतामस्तु मुदर्पणे ॥'

१८. सिद्धान्तदर्पणटीका—

प्रारम्भे—

'श्यामोऽपि यः श्रुतिसरोरुहबोधरक्तः
शान्तोऽपि यः स्यति तमस्ततिमन्तरस्थाम् ।
प्रत्यक्पदं दिशति यः परमं स्वगोभि-
र्व्यासं तमद्भुतरविं शरणं प्रपद्ये ॥'

समाप्तौ—

'टिप्पणी नन्दमिश्रेण(?)[1] नन्दसूनुनिषेविणा ।
सिद्धान्तदर्पणेऽकारि हारिण्यस्तु सतामियम् ॥'

१९. स्तवमालाभाष्यम्—

'श्रीरूपदेवः करुणैकसिन्धुः स्तवालिमेतां यदि नाकरिष्यत् ।
भक्ता यथावद्व्रजराजसूनोर्नैवागमिष्यन्गुणरूपलीलाः ॥
विद्याभूषणभणिते स्तवमालाभूषणे भाष्ये ।
परितुष्यतु वनमाली वररुचिशाली बतैतस्मिन् ॥'

एवमनेकानवद्यग्रन्थनिर्मातायं बलदेवविद्याभूषणो जयपुरनिवासयितृजयसिंहमहाराजसभायामागत्य गालवाश्रम(गलता)स्थितरामानुजीयाचार्यैः शास्त्रार्थं विधाय शालिवाहन १४०७ शकप्रादुर्भूतचैतन्यमहाप्रभुसंप्रदायेऽपि वैष्णवसंप्रदायान्तर्गतत्वं साधयामासेति वङ्गगौडगोस्वामिनां किंवदन्ती. एवं च ख्रिस्ताष्टादशशतिकाप्रारम्भ एव जयसिंहमहाराजस्थितेर्निर्णयात्ख्रिस्ताष्टादशशतिकैव विद्याभूषणकालः प्रतीयते.

अस्याश्चानायासेनैव काव्यप्रकाशस्थकारिकाशयबोधिकायाः सटीकसाहित्यकौमुद्याः पुस्तकद्वयमस्माभिर्मुद्रणकाले समासादितम्. तत्रैकं तु क-संज्ञकमस्माभिः संपूर्णं द्रव्येण

---

१. न ज्ञायते 'नन्द' इत्यपि विद्याभूषणस्यैव नाम भिन्नो वायमिति.

क्रीतम्. द्वितीयं तु ख-संज्ञकं चरमपरिच्छेदहीनं जयपुरराजगुरुश्रीलक्ष्मीदत्तभट्टतनय-श्रीश्रीदत्तशर्मभिः स्वकीयपुस्तकालयतो दत्तम्.

एवं पुस्तकद्वयाधारेणैव कृतशोधनेऽप्यस्मिन्पुस्तकेऽस्मद्दोषादक्षरयोजकदोषाद्वा यत्र क्वचिदशुद्धिः स्थिता जाता वा तत्र सहृदयहृदयाः सौहार्दतः समाधास्यन्ति. यतः—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

इति विज्ञापयतः

काव्यमालासंपादकौ

**पण्डितशिवदत्त-काशिनाथौ ।**



# साहित्यकौमुद्युदाहरणानुक्रमणी ।

---

# साहित्यकौमुदीकर्त्तुपन्यस्तानामुदाहरणातिरिक्तानामनुक्रमणिका।

## तत्रोपक्रमोपसंहारयोः स्वकीयश्लोकाः।

# प्राचीनवाक्यानि ।

# साहित्यकौमुदीविषयानुक्रमणिका मूलकारिकाश्च ।



अस्याः साहित्यकौमुद्या मुद्रणावसरेऽस्मद्दोषादक्षरयोजकदोषाद्वा मूलकारिकाणां स्थूलीभवनेऽङ्कयोजने च विपर्यासो जात इति मूलकारिकाणां स्फुटीभवनाय छात्राणां पाठसौकर्याय च सविषयप्रदर्शनं पृथङ्मुद्रणमारब्धमितीयमेवानुक्रमणिकापि बोध्या सहृदयैः ॥



विषयः । मूलकारिका । पृष्ठे ।

प्रथमः परिच्छेदः ।

मङ्गलाचरणम्— २

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥ १ ॥**

काव्यप्रयोजनानि— ३

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**
**सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥ २ ॥**

काव्योद्भवहेतुः— ३

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।**
**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥ ३ ॥**

काव्यस्वरूपम्— ४

**तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि ।**

उत्तमकाव्यम्— ५

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ॥ ४ ॥**

मध्यमकाव्यम्— ५

**अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।**

अवरकाव्यम्— ६

**शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥ ५ ॥**

| विषयः । | मूलकारिका । | पृष्ठे । |
|---|---|---|
| | व्रीडा चपलता हर्ष आवेगो जडता तथा । | |
| | गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ ९ ॥ | |
| | स्वप्नो विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता । | |
| | मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ १० ॥ | |
| | त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः । | |
| | त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ ११ ॥ | |
| शान्तस्यापि रसत्वम्— | | ४० |
| | निर्वेदस्थायिभावाख्यः शान्तोऽपि नवमो रसः । | |
| भावस्वरूपम्— | | ४१ |
| | रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ॥ १२ ॥ | |
| | भावः प्रोक्तः | |
| रसाभासभावाभासस्वरूपम्— | | ४२ |
| | तदाभासा अनौचित्यप्रवर्तिताः । | |
| भावशान्त्यादि— | | ४३ |
| | भावस्य शान्तिरुदयः संधिः शबलता तथा ॥ १३ ॥ | |
| भावशान्त्यादीनामङ्गित्वमपि— | | ४३ |
| | मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन । | |
| लक्ष्यव्यङ्ग्यक्रमविभागः— | | ४४ |
| | अनुस्वानामसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥ १४ ॥ | |
| | शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः । | |
| शब्दशक्त्युद्भवस्वरूपम्— | | ४४ |
| | अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ॥ १५ ॥ | |
| | प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा । | |
| अर्थशक्त्युद्भवस्वरूपभेदाः— | | |
| | अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः ॥ १६ ॥ | |

---

१. व्याख्यानगतस्यास्यापि पद्यगन्धिगद्यस्य मूलकारिकात्वं केचिन्मन्यन्ते.

१. अस्यार्धस्य मूलकारिकात्वं न मन्यन्ते केचित्. एवमेतदुत्तरं 'वाच्ये गम्ये च सा साम्ये एकदेशविवर्तिनी' इत्यर्धस्य कारिकात्वं न मन्यन्ते.

---

१. कारिका इमा गोस्वामिदेवीदत्तात्मजरामरङ्गशास्त्रिणोल्लिख्य मुद्रणार्थं समर्पिताः.

# काव्यमाला ।

श्रीविद्याभूषणविरचिता

## साहित्यकौमुदी ।

कृष्णानन्दिन्याख्यव्याख्यासंवलिता ।



प्रथमः परिच्छेदः ।

कारुण्याद्गजपतिराशु यस्य भेजे
निर्धूताखिलवृजिनः परं प्रमोदम् ।
चैतन्याकृतिमजितं जितं स्वभक्तै-
स्तं वन्दे मधुरिमसागरं मुरारिम् ॥

प्रणम्य कृष्णं सर्वेशं श्रीवत्साद्युक्तिसंश्रयात् ।
व्याख्यायतेऽतिसंक्षेपात्सेयं साहित्यकौमुदी ॥

सद्भिः पद्यैः कारिका भारतीयैः शुद्धिं निन्ये तुच्छपद्यैरनच्छाः ।
साहित्याम्भोजन्मसच्चञ्चरीकः सोऽयं विद्याभूषणोऽस्मान्पुनीताम् ॥

काव्यरसास्वादनाय वह्निपुराणादिदृष्टां साहित्यप्रक्रियां भरतः संक्षिप्ताभिः कारिकाभिर्निबबन्ध । कारिकास्ता व्याचिख्यासुर्वृत्तिकृन्मङ्गलमाचरति—**कारुण्यादिति** । यस्य कारुण्याद्गजपतिर्निर्धूताखिलवृजिनः सन्नाशु परं प्रमोदं भेजे तमित्यनुषङ्गः । अत्र मुरारिश्चैतन्यश्चेति द्वावर्थौ प्रतिपाद्येते । तत्राद्यो ग्रन्थकर्तुः परमेष्ठगुरुः श्रीमद्रसिकानन्दापराख्यः । तत्पक्षे गजपतिर्गोपालदासनामा करिराजः । वृजिनं पशुस्वभावः । प्रमोदं सत्सेवाजनितमानन्दम् । चैतन्यायाकृतिर्यस्य तम् । चैतन्यदेवसेवनसमर्पितशरीरमित्यर्थः । अजितं बौद्धम्लेच्छादिभिः । जितं वशीकृतम् । स्वीयैर्भक्तैः । मधुरिमा निजो भागवतो वा । अथ द्वितीये पक्षे चैतन्याख्याकृतिर्यस्य तम् । महाप्रभुमित्यर्थः । मुरारिं तत्प्रकाशरूपं भक्तिप्रदानेन संसृतिरूपकुत्सानिवर्तकमिति च । गजपतिः प्रतापरुद्र उत्कलाधिपतिः । वृजिनं राजसत्त्वम् । प्रमोदं प्रेमाणम् । अजितं विषयैः । अत्र प्रथमोऽर्थो वाच्यः । प्रकरणवैशिष्ट्याद्द्वितीयस्तु व्यङ्ग्य एव । गुरुविषया रतिश्च । अभिधामूलध्वनिरयम् । भगवत्प-

सूत्राणां भरतमुनीशवर्णितानां
वृत्तीनां मितवपुषां कृतौ ममास्याम् ।
लक्ष्याणां हरिगुणशालिनां च सत्त्वा-
त्कुर्वन्तु प्रगुणधियो बतावधानम् ॥

निष्प्रत्यूहप्रारिप्सितपरिसमाप्तिकामो मुनिः समुचितां गीर्देवीं प्राक्प्रणमति—

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥ १ ॥**

अत्र विधिकृतविलक्षणविश्वविधानाज्जयतीति नतिमाक्षिप्य तां प्रति प्रणतोऽस्मीति व्यज्यते ।

---

क्षेऽपि पद्यमिदं योजयितुं शक्यम् ॥ स्वप्रवृत्तेः साफल्यमाह—**सूत्राणामिति**। क्वचिद्भरतसूत्राणि सन्ति । न च संक्षिप्ता वृत्तयो नापि भगवद्विषयाण्युदाहरणानि । क्वचिद्भरतसूत्राण्येव न सन्ति । क्वचित्तु तानि त्रीण्यपि न । अस्यां मम कृतौ साहित्यकौमुद्यां तु त्रीण्यपि तानि सन्तीति सुधियां प्रवृत्तिर्भवेदेवेत्यर्थः । अत्रत्यानि पद्यानि श्रीशुकस्य श्रीरूपकर्णपूरकृष्णकविप्रभृतेश्च वचांसि प्रायः संगृहीतानि । समाहर्तुस्तु क्वचिदेव कतिचिदेवेति बोध्यम् ॥ मुनिकृतां मङ्गलकारिकामवतारयति—**निष्प्रत्यूहेति**। निर्विघ्ना या प्रारब्धमिष्टस्यास्य शास्त्रस्य पूर्तिस्तत्कामो मुनिर्भरतः । गीर्देव्याः समुचितत्वं वाङ्मयग्रन्थाधिष्ठातृत्वात् । **नियतीति**। भारती सरस्वती जयति सर्वोत्कर्षेण वर्तते। सर्वोत्कर्षाश्रयत्वात्तदितरसर्वनतिराक्षेपाल्लभ्यते । सर्वान्तःपातात्स्वस्यापि सा व्यज्यते । किं कुर्वती जयति । कवेर्निर्मितिमादधती । कीदृशीम् । नियतिरदृष्टं तत्कृतेन नियमेन वर्जिताम् । शब्दार्थौ हि काव्यम् । तत्रार्थो नित्यानित्यसाधारणस्तत्रादृष्टाधीनता कथमिति भावः । ह्लादैकमयीमानन्दमात्रस्वरूपाम् । अनन्यपरतन्त्राम् । भारत्या अन्यस्य परस्यासाधारणस्य तन्त्रामधीनाम् । पश्चान्नञ्समासः । ननु नित्यानित्यरूपायां काव्यस्वरूपनिर्मितावपरतन्त्रामिति युक्तं वक्तुमिति चेन्न, परशब्दात् । असाधारणान्याप्रकाश्यामनन्यपरतन्त्रामित्यर्थस्य विवक्षितत्वात् । नवरसा चासौ रुचिरा चेति विशेषणयोः कर्मधारयः । विधिनिर्मितिः खलु जीवादृष्टानुसारिणी त्रिगुणमयत्वात् सुखदुःखमोहस्वभावा प्रकृतिमहदहंकारादिकारणकलापाधीना, षड्रसा, न च हृद्या, दृष्टा, तद्विलक्षणा तु कविनिर्मितिरिति व्यतिरेकालंकारो व्यङ्ग्यः, भारतीविषयको भावश्च । न च मङ्गलमप्रमाणमफलं चेति वाच्यम् । शिष्टाचारानुमितश्रुतिप्रामाण्याद्ग्रन्थसमाप्तेः फलत्वात् । ननु क्वचित् सत्यपि मङ्गले समाप्तेरसति च समाप्तेर्वीक्षणाद्व्यभिचारः । मैवम् । अनुरूपमङ्गलाकरणात्, बहिस्तत्करणाच्च । प्रेक्षावन्तः सुधियः । शास्त्रं

प्रेक्षावत्प्रवृत्तये शास्त्राभिधेयफलं तावदाह—

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**
**सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥ २ ॥**

कीर्तिर्धनप्राप्तिर्देवमनुष्यादिव्यवहारावगतिर्देवतावन्दनकृतः क्लेशनाशः सपद्येव रसानुभवसमुद्भूतः परमानन्दः सरसतया धर्मादिरूपहितोपदेशश्च काव्यादेव भवतीति सर्वथा तत्र प्रयतनीयम् ।

**वेदः** खलु शब्दप्राधान्यात्प्रभुसंमितः ।

**पुराणादि**श्चार्थप्राधान्यात्सुहृत्संमितः शास्ति ।

**काव्यं** तु शब्दार्थयोर्गुणतया रसाङ्गभूतव्यापारप्रावण्यात्तद्विलक्षणमतः कान्तासंमितं तदिति ।

तस्य हेतुमाह—

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।**
**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥ ३ ॥**

शक्त्यादित्रयं काव्यकारणमित्यर्थः । तत्र शक्तिः प्राक्तनसंस्कारविशेषः काव्योत्पादस्वादैकहेतुः। यां विना काव्यं नोदयति, उदितं वोपहा-

---

काव्यनिरूपकं कारिकाप्रचयः । तदभिधेयं च काव्यम् । काव्यफलमेव तन्निरूपकस्यास्य फलमित्यर्थः । **काव्यं यशस इति** । काव्यमतिचमत्कारि कविवचनसंदर्भः । कृत्-वित्-युज्-शब्दा भावे क्विबन्ताः । तादर्थ्ये चतुर्थ्यः । **कान्तासंमितेति**। संमितं तुल्यम् । शब्दः खलु प्रभुसुहृत्कान्तासंमितत्वात्त्रिधा । तत्राद्यो वेदः शासनाप्रधानो विधिलक्षणः । स हि त्वमेवं कुर्वीति प्रभुरिवाज्ञापयति । ततश्च तन्नियुक्तो निष्फले संध्यावन्दनादौ प्रवर्तते । द्वितीयस्त्वर्थतात्पर्यवान् सिद्धार्थरूपः पुराणेतिहासादिः । स हि सुहृदिवैवं कृत इदमिष्टं भवत्येवं कृते त्विदमनिष्टमित्येतावन्मात्रं बोधयति, न त्वाज्ञापयति । तृतीयः पुनस्ताभ्यां विलक्षणो रसप्रधानः काव्यरूपः । तत्र हि रसाङ्गभूतेन व्यापारेण विभावनादि संयोजनात्मना । व्यञ्जनव्यापारेण वा निष्पाद्यस्य रसादेर्निष्पादकतया शब्दार्थयोरुभयोरपि गौण्याद्रसस्यैव प्राधान्यम् । स च कान्तेवोपदिशति । अयं भावः—सुकुमारमतयोऽतिसुखिनो हि राजकुमारादयः शासनाप्रधानवेदादौ प्रवर्तयितुमशक्याः । काव्यं तु तान्कान्तेव सरसतापादनेनाभिमुखीकृत्य हितोपदेशं ग्राहयति । गुडजिह्विकया शिशूनिवौषधय इति । ततश्चैवमिष्टसाधकत्वात्काव्यस्य हेतुरुपादेयः॥ **शक्तिरिति** । देवताप्रसादादिजातः कवित्वबीजसंस्कारविशेषः शक्तिः । सैव प्रतिभा । लोकशब्देन लोकवृत्तं योगादुपचाराद्वा । धर्मिमात्रपरामर्शस्य व्युत्पत्त्यनाधायक-

साय । लोकः स्थावरजंगमात्मकलोकवृत्तम् । शास्त्रं छन्दोव्याकरणादि । काव्यं महाकविकृतम् । आदिशब्दादितिहासादि च । तेषां परामर्शाद्व्युत्पत्तिः । काव्यज्ञाः काव्यनिर्माणविचारणचतुरास्तदुपदेशेन निर्माणे योजने च पुनः पुनः प्रवृत्तिरिति त्रिकं समुदितमेव हेतुरित्येके । डिम्भेनापि काव्योत्पादनाच्छक्तिरेव केवलेत्यपरे ।

तस्य स्वरूपमाह—

**तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि ।**

दोषशून्यं सगुणं सालंकारं शब्दार्थयुगलं तत्काव्यम् । अदोषाविति । यावद्दोषराहित्यं स्फुटदोषराहित्यं रसापकर्षकदोषराहित्यं वा नञर्थः । अनलंकृती क्वापीति स्फुटालंकारविरहेऽपि न काव्यत्वहानिः ॥

यथा—

'प्रियः सोऽयं कृष्णः सहचरि कुरुक्षेत्रमिलित-
स्तथाहं सा राधा तदिदमुभयोः संगमसुखम् ।

---

त्वात् । निर्माणं रचनम् । रसानुगुणतया प्रबन्धादौ घटनं विचारणम् । तदेव योजनम् । इतिशब्दो मिलितोपस्थापनाय । अन्यथा तद्वैयर्थ्यात् । तथा च काव्यस्योद्भव उत्कृष्टोत्पत्तिः । **डिम्भेनापीति** । अत एवैकहेतुरित्येकशब्दः । अन्यद्वयं तु प्रकर्षायैवेति भावः । शक्तिः खलु अनन्यथासिद्धनियतपूर्ववर्तिकारणम् । परयोस्तु न तथात्वमिति भावः । न च डिम्भेऽपि पूर्वजन्मार्जितयोर्निपुणताभ्यासयोः प्राचीनयोस्तयोः सत्वान्न व्यभिचारः । अत एव 'जन्म जन्म यदभ्यस्तम्' इत्याद्युक्तिरिति वाच्यम् । परस्पराश्रयापत्तेः । तथा हि—सिद्धे कारणत्वे तयोः कल्पनम्, तस्मिंश्च सति कारणत्वमिति । तस्मान्मतद्वयमिदं परीक्षणीयं सुधीभिः । 'अदोषं गुणवत्काव्यमलंकारैरलंकृतम् । रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति ॥' इति वह्निपुराणमनुसृत्याह—**तददोषाविति । सगुणमिति** । गुणस्य रसनिष्ठत्वेऽपि तद्व्यञ्जकपरं गुणपदम् । **यावदिति** । अत्र काव्यपदं विरलविषयमिष्टम् । **स्फुटदोषेति** । यदुक्तम्—'कीटानुविद्धरत्नादिसाधारण्येन काव्यता । दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः ॥' इति, नन्वेतत्कुरङ्गनयनेत्यादौ पर्याप्तम् । निर्दोषसगुणालंकारशब्दार्थरूपत्वादिति चेन्न । तादृशवचनसंदर्भरूपतायास्तत्र विवक्षितत्वात् । **अनलंकृती क्वापीति** । नञोऽत्राल्पार्थत्वादल्पत्वस्य चास्फुटत्वे विश्रामात् स्फुटालंकारविरहेऽपीति व्याख्यातम् ॥ **प्रिय इति** । कुरुक्षेत्रे कृष्णेन संगता

तथाप्यन्तःखेलन्मधुरमुरलीपञ्चमजुषे
मनो मे कालिन्दीपुलिनविपिनाय स्पृहयति ॥'

अत्र न कश्चिदलंकारः स्फुटः, रसस्तु प्राधान्यादलंकार्य इति वक्ष्यते । न चात्र विभावना विशेषोक्तिर्वा स्फुटा, निषेधमुखेनानुपादानात् ।

तद्भेदानाह—

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ॥४॥**

इदं काव्यं वाच्याद्व्यङ्ग्येऽतिचमत्कारिणि सत्युत्तमम् । तदेतदुत्तमं काव्यं ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या बुधैर्ध्वनिरित्यभिधीयते ।

यथा—

'मुक्तावली निशि मया दयिताकदम्ब-
वाटीकुटीरकुहरे सखि विस्मृतास्ति ।
तामाहरेति वृषभानुजया नियुक्ता
तां प्रोज्झ्य किं शशिकले गृहमागतासि ॥'

अत्र कृष्णाङ्गसङ्गानुभवायैव तया त्वं प्रतार्य प्रेषिता, न पुनर्मौक्तिकहाराहरणाय । यन्नखाङ्कशशिकलाञ्छितवक्षोजशंभुः समागतासीति व्यङ्ग्यस्य वाच्यादतिचारुत्वादुत्तममिदं काव्यम् ।

**अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।**

---

राधा विशाखामाह—तथा चार्थे पूर्वार्धान्ते यद्यप्येवमिति वाच्यं परत्र तथापीत्युक्तेः । **वक्ष्यत इति** । रसाभावतदाभासेत्यादौ । **न चात्रेति** । अत्र प्रियादीनामनुपभुक्तत्वस्य प्रसिद्धकारणस्याभावेऽपि तत्कार्यस्य स्पृहारूपस्योत्पत्तिर्विभावना । तेषामत्यन्तोपादेयत्वस्याप्रसिद्धकारणस्य विभावनात् । अस्फुटत्वं चानुपभुक्तत्वाभावत्वेनानुक्तेः । एवमुपभुक्तत्वरूपकारणसत्वेऽप्यस्पृहारूपस्य कार्यस्याभावोक्तेर्विशेषोक्तिरप्यस्पृहाभावत्वेनानुक्तेरस्फुटैव । तदेतदुक्तम्—**निषेधमुखेनानुपादानादिति** । निषेधवाचकैर्नञादिशब्दैरप्रतिपादनादित्यर्थः । एवं सति तयोः सदेहरूपः संकरोऽपि निरस्तो वेदितव्यः । **तद्भेदानिति** । बुधैर्ध्वनिपण्डितैः । **मुक्तावलीति** । ललितादीनां सपरिहासोक्तिः । **यन्नखाङ्केति** । त्वमद्यान्वर्थसंज्ञासीति भावः । **अतादृशीति** । **वाच्यादचारुणीति** ।

वाच्यादचारुणि व्यङ्ग्ये तदिदं मध्यमं काव्यं गुणीभूतव्यङ्ग्यमित्यभिधीयते।

यथा—

'कर्णकलिपतरसालमञ्जरीपिञ्जरीकृतकपोलमण्डलः।
निष्पतन्नयनवारिधारया राधया मधुरिपुर्निरीक्ष्यते॥'

अत्र रसालवाटीकृतसंकेता तत्राहं न गतेति व्यङ्ग्यं गुणीभूतं तदपेक्षया वाच्यस्यैव चारुत्वात्।

**शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्॥ ५॥**

स्फुटव्यङ्ग्यरहितं तदिदमवरं काव्यं चित्रमित्यभिधीयते। तच्च शब्दचित्रमर्थचित्रमिति द्विविधम्।

क्रमेणोदाहरणम्—

'ऊर्जत्स्फूर्जद्गर्जनैर्वारिवाहाः प्रोद्यद्विद्युद्दामविद्योतिताशाः।
अद्रावद्रौ विद्रुता द्राघयन्ते दन्तिभ्रान्त्या सिंहसंघप्रकोपान्॥'

'कदम्बमाला कलिता कं सहर्षं न कुर्वती।
कृष्णमूर्तिरिवाभाति कालिन्दीकाननस्थली॥'

अनयोरनुप्रासनिबन्धः शब्दसाम्योपमा च क्रमात्स्वादाय कल्पते, न तु किंचिद्व्यङ्ग्यं प्रसरति ततः कनिष्ठमेतत्।

इति भरतसूत्रवृत्तौ साहित्यकौमुद्यां काव्यप्रयोजनहेतुस्वरूपविशेषनिर्णयो नाम प्रथमः परिच्छेदः।

---

तस्मादचारुत्वं तस्य समत्वे न्यूनत्वे वा ज्ञेयम्। **कर्णेति**। नान्दीमुखीं वृन्दाह—पिञ्जरीकृतं पीतीकृतम्॥ **शब्दचित्रमिति**। चित्रं गुणालंकारयोगि। इदं वृत्तावध्याहृतं बोध्यम्। ऊर्जदित्यादिद्वयं मधुमङ्गलवाक्यम्। द्राघयन्ते दीर्घान्कुर्वन्ति। कंसस्य हर्षं न कुर्वती मूर्तिः। कं जनं सहर्षं न कुर्वती, अपि तु सर्वं सहर्षं कुर्वती स्थली। पूर्वत्र भ्रान्तिमतः सत्त्वेऽपि न तस्योत्कटत्वम्, किं त्वनुप्रासस्यैव। ततः शब्दचित्रत्वव्यपदेशः। परत्रानुप्रासे सत्युपमायास्ततोऽर्थचित्रत्वव्यपदेशः। भूम्ना व्यपदेशा भवन्तीति हि न्यायः॥

इति कृष्णानन्दिन्यां साहित्यकौमुदीटीकायां प्रथमः परिच्छेदः।

## द्वितीयः परिच्छेदः ।

शब्दार्थौ काव्यमित्युक्तं तयोः क्रमेण स्वरूपमाह—

**स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।**

अत्र काव्ये शब्दस्त्रिधा । उपाधित्रैविध्यादेव ।

स्वरूपमेषां वक्ष्यते—

**वाच्यादयस्तदर्थाः स्युः**

तेषां वाचकादीनामर्थाः क्रमाद्वाच्यलक्ष्यव्यङ्ग्याः स्युः ।

**तात्पर्यार्थोऽपि केषुचित् ॥ १ ॥**

षष्ठ्यर्थे सप्तमी । केषांचिन्मते वाक्यार्थस्तात्पर्याख्यवृत्तिगम्यः । एकैकपदार्थबोधनेनाभिधाया विरतत्वाद्वाक्यार्थस्वरूपस्य पदार्थानामन्वय[स्य] बोधनाय तात्पर्यनाम्नी वृत्तिः । तदर्थस्तात्पर्यार्थः । तद्बोधकं तु वाक्यमित्यभिहितान्वयवादिनः ।

अर्थस्यापि व्यञ्जकतामाह—

**सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ।**

प्रायशो वक्त्रादिवैशिष्ट्ये सतीत्यर्थः ।

तत्र वाच्यस्य यथा—

'मधुरिता मधुना विधुनाप्यसौ सखि पतङ्गसुतापुलिनाटवी ।
सवयसा वयसा च विभूषिता तनुरियं किमिह क्षममुच्यताम् ॥'

अत्र तथाभूता पुलिनाटवी तरुणतमालेनेव, मत्तनुश्च महेन्द्रमणिनेव,

---

स्वरूपलक्षणादिना विवेचनीयेषु काव्यलक्षणपदार्थेषु प्राधान्याच्छब्दार्थयोः स्वरूपं पूर्वं निरूपयिष्यञ्शब्दं तावद्विभजति—**स्यादिति** । शास्त्रे व्यञ्जकस्यादर्शनाद**त्रेति** । **एकैकेति** । वृत्तिं विनार्थबोधनेऽतिप्रसङ्गादन्वये तात्पर्याख्या वृत्तिः । अन्वयस्तात्पर्यार्थः । अभिहितानामभिधयोपस्थापितानां पदार्थानां तात्पर्यवृत्त्यान्वय इति वादिनो भट्टाः । परे तु—नैतां स्वीकुर्वन्ति पदार्थशक्तत्वेन ज्ञातं पदमेव स्वार्थस्मृतिद्वाराकाङ्क्षायोग्यतासंनिधिसाचिव्यात् समभिव्याहृतपदार्थेन सह स्वार्थान्वयं बोधयति, तथैव कार्यकारणभावकल्पनात्किमनया तात्पर्यवृत्त्येत्याहुः । शब्दवदर्थोऽपि व्यञ्जकः । स च सर्वोऽपीत्याह—**सर्वेषामिति** । मयाद्य तव बुद्धिः परीक्षणीयेति कृष्णाङ्गसङ्गाभिलाषिणी राधा विशाखामाह—**मधुरितेति** । मधुना वसन्तेन । सवयसा सख्या । वयसा यौवनेन । अत्र वाच्यार्थेनैव वक्तृवैशिष्ट्यम । वाक्यार्थोत्तरं प्रतीयमाने कृष्णसङ्गाभिलाषे न शब्दस्य व्यापारो

येन राजिष्यते, तं कृष्णं त्वरितमाहर यदि चातुर्यं बिभर्षीति वाच्योऽर्थो व्यञ्जयति।

लक्ष्यस्य यथा—

'साधयन्त्यनुलवं प्रियं हरिं मत्कृते श्रममवाप यत्सखी।
तच्चकार चरितं हितैषिणी बन्धुराङ्गि करणीयमुच्चकैः॥'

अत्र स्वसुखतात्पर्यान्मत्कान्तं रमयन्ती त्वं शत्रुत्वं कृतवतीति लक्ष्योऽर्थः कान्ते सापराधत्वप्रकाशनं व्यञ्जयति।

व्यङ्ग्यस्य यथा—

'नाक्षिणी क्षिप कुरङ्गि सर्वतः साक्षिणी भव सखीभिरन्विता।
माधवः किल दुनोति मामसौ साधवः शृणुत भोः शिखण्डिनः॥'

अत्र निर्जनोऽयं देश इति व्यङ्ग्योऽर्थः। स्वच्छन्दमिह मया सह विहरेति व्यञ्जयति।

वाचकादीनां क्रमात्स्वरूपमाह—

**साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः॥ २॥**

यस्य शब्दस्य यत्राव्यवधानेन संकेतो गृह्यते स तस्यार्थस्य वाचकः संकेतश्चास्माच्छब्दादयमर्थो बोध्य इतीश्वरेच्छा। तद्ग्रहस्तु वृद्धव्यवहारादितः। तथा हि। प्रयोजकवृद्धेन 'गामानय' इत्युक्ते प्रयोज्यवृद्धे सास्नादिमन्तमर्थं स्थानात्स्थानान्तरं नयति सति पार्श्वस्थः शिशुः 'अनेनास्माच्छब्दादेवंविधोऽर्थो ज्ञातः' इति प्रथमं प्रतिपद्यते। ततश्च 'गां नयाश्वमानय'

---

विरामात्। किंत्वर्थस्यैवेति बोध्यम्। **साधयन्तीति**। स्वसखीं मद्राह। बोध्यसख्या वैशिष्ट्यम्। ज्ञातापकारिणीं प्रतीदृशवचसो बाधान्मुख्यार्थः श्रोत्रा प्रत्येतुं न शक्य इति स्वनिमित्तप्रियसाधनाहितैषणादिरूपं शत्रुत्वाचरणं कृतमिति विपरीतं लक्ष्यते। लक्षणामूलो ध्वनिरयम्॥ **नाक्षिणीति**। कृष्णान्तिके स्वयं दूत्यं कुर्वती राधाह—अत्र कुरङ्ग्यादीनां तत्तत्संभवान्न लक्षणाप्रसङ्गः। **साक्षादिति**। अभिधत्ते प्रतिपादयति। तेन न विशेषणान्तरवैयर्थ्यम्। संकेतितं गृहीतसंकेतम्। इदं साक्षादर्थप्रतिपादिकायां चेष्टायां, माधुर्यादिव्यञ्जकस्पर्शादिवर्णेषु चातिव्याप्तेर्वारणाय। न च साक्षादित्यधिकम्। 'यन्नामा यत्र चैत्यादिर्विषयोऽपि स तादृशः' इति व्यवहितसंकेतवति 'चैत्यादिपदेऽतिव्याप्तेर्वारणीयत्वात्। तत्र शक्यसंकेतव्यवहितसंकेतसत्त्वात्। यथा 'वटो ग्रामः' 'पुरुषोत्तमो

इति तेनोक्ते तस्मिंस्तथा तथा प्रवृत्ते 'तस्य तस्य शब्दस्य तत्र तत्रास्ति कश्चन संबन्धः' इति निश्चिनोति । आदिशब्दाद्व्याकरणकोशाप्तवाक्यादेः ।

स चार्थः क इत्याह—

**संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।**

जातिगुणक्रियासंज्ञारूपश्चतुर्विधोऽर्थः संकेतितः । तत्र जातिर्गुणश्च सिद्धरूपो वस्तुधर्मः । पदार्थव्यवहारयोग्यतानिर्वाहिका गोपिण्डादिषु गोत्वादिका जातिः । विशेषाधानहेतुर्गुणः । शुक्लादयो हि गवादीन्सजातीयेभ्यो नीलगवादिभ्यो व्यावर्तयन्ति । क्रिया पूर्वापरीभूतावयवा पाकादिः साध्यरूपो वस्तुधर्मः । संज्ञा तु डित्थादिद्रव्येषु वक्त्रा यदृच्छया संनिवेशितं डित्थादिशब्दस्वरूपमेव । एकव्यक्तिवाचकः सेत्यन्ये ।

एष्वेव व्यक्त्युपाधिषु 'गौः शुक्लः पाचको डित्थः' इत्यादेश्चतुर्विधस्य श-

---

देशः' इति वृक्षादिसंकेतेन ग्रामादिसंकेतस्य व्यवधानात् न साक्षात्संकेतः । न च तत्रापि शक्तिः । लक्षणयैवोपपत्तेः । ननु 'साक्षात्संकेतवान्वाचकः' इत्येव युक्तम्, तेनाभिधत्त इति व्यर्थम् । मैवम् । संयोगाद्यैरभिधायां नियन्त्रितायां वाच्यार्थव्यञ्जकदशायामतिव्याप्तेर्वार्यत्वात् । न च तथापि तत्रातिव्याप्तिः । यस्य शब्दस्य यत्राव्यवहितसंकेतग्रहो यदा यदर्थग्रहे उपयुज्यते स तदा तदर्थवाचक इति लक्षणार्थत्वात् । अव्यवधानेन न तु विरम्य व्यापारान्तरेण । **संकेतश्चेति** । न चाधुनिकसंकेतेष्वव्याप्तिः । तत्रापि वेदोक्ततत्वेन तदिच्छात्वानपायात् । **तथा हीति** । तेन प्रयोजकवृद्धेन । तस्मिन्प्रयोज्यवृद्धे । तथा तथा गोर्नयनेऽश्वस्यानयने चेत्यर्थः । संबन्धः संकेतात्मा । ननु संकेतग्रहस्य शब्द एव सहकारितायां किं मानमिति चेत्, अगृहीतसंकेतस्य पुंसः शब्दादर्थाप्रत्ययं गृहाण । **आदिशब्दादिति** । यदुक्तम्—'शक्तिग्रहो व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥' इति ॥ **स चार्थ इति** । विशेषः सजातीयेभ्यो व्यावर्तनम् । 'शिष् असर्वोपयोगे' इति धात्वनुसारात् । आधानं प्रत्ययः । सजातीयव्यावृत्तिधीहेतुरित्यर्थः । **क्रियेत्यादि** । यदुक्तम्—'यावत्सिद्धमसिद्धं वा साध्यत्वेन विवक्ष्यते । आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥' इति । यदृच्छया स्वेच्छया । संनिवेशितं प्रयुक्तम् । शब्दस्वरूपं स्फोटरूपमित्यर्थः । **एकेति** । एकस्या व्यक्तेर्वाचकं पदं संज्ञेत्यर्थः । संज्ञाशब्दः खलु स्वरूपमेवाभिधत्ते । एवं हि मन्यन्ते—'ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा । तथैव सर्वशब्दानामेते पृथगवस्थिते ॥' इति ॥ **एष्विति** । जात्यादिषु चतुर्ष्वित्यर्थः । **न चेति** ।

---

१. 'दशम्यां पुत्रस्य जातस्य विदध्यात्' इति गृह्योक्तेः.

ब्दस्य क्रमात्संकेतः। न चोपाधिष्वर्थक्रियाकारितानुपपत्तिः। तैर्व्यक्तया-क्षेपात्। न चैवं व्यक्तिष्वेव संकेतोऽस्त्विति वाच्यम्। आनन्त्यव्यभिचार-दोषापत्तेः। गुणादीनामप्येकव्यक्तित्वान्न किंचिदवद्यम्। तेषां भेदावभा-सस्त्वाश्रयभेदादेव, न तु स्वतः। मणिदर्पणादिभेदान्मुखभेदवत्।

अथवा सर्वत्र जातिरेव संकेतगोचरः। चन्द्रचन्दनशङ्खादिषु 'अयं शुक्लोऽयं शुक्लः' इत्यादि प्रतीत्यविशेषाच्छुक्लत्वादि, गुडतण्डुलतैलपाकादिषु 'अयं पाकोऽयं पाकः' इति पाकादित्वम्, बालवृद्धशुकाद्युक्तेषु डित्थादिषु 'डित्थोऽयम्' इति। डित्थादित्वमिति सर्वत्र तदवगाहात्। चतुर्विधानां गवादिशब्दानां जात्यादिचतुष्कं क्रमात्प्रवृत्तिनिमित्तम्, जातिरेव वा सर्वेषां तेषामिति ह्यर्थः।

वाचकस्योपाधिमाह—

**स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥ ३ ॥**

---

अर्थः प्रयोजनं जलाहरणादि। क्रिया निर्वाहः। **तैरिति**। जात्याद्यैरुपाधिभिः। **न चैवमिति**। सर्वासु व्यक्तिषु संकेतग्रहो व्यवहाराङ्गम्, उत यस्यां कस्यांचिदिति। नाद्यः, आनन्त्यात्। सर्वासां तासामनुपस्थितेः। सामान्यलक्षणानङ्गीकारात्। नापरः, व्यभिचारात्। असंकेतितगोपिण्डस्येव घटादेरपि गोपदात् प्रतीतिः स्यात्, अगृहीतसंकेततायाः साम्यात्। ननु—गवादिगतानां शुक्लादिगुणानां गुडादिगतानां पाकादिक्रियाणां बालादिगतानां डित्थादिसंज्ञानां च प्रत्यक्षतो भेदसिद्धौ व्यक्तिसंकेतपक्षोक्तदोषस्तुल्यः इति चेत्तत्राह—**गुणादीनामिति**। आदिना क्रियासंज्ञे। **तेषामिति**। प्रत्यभिज्ञया धर्मिभेदग्रहस्य बाधादाश्रयभेदहेतुका तद्भेदधीरित्यर्थः॥ जातिरेवेति पक्षं व्याचष्टे—**अथवेति**। चन्द्रचन्दनादौ शुक्लादिर्गुणः परमार्थतो भिन्न एवाबाधिततारतम्यप्रतीतेः। गुडपाके रूपपरावृत्तिः तण्डुलपाके चैकध्वंसादपरोत्पत्तिरिति नैकरूप्यम्। **बालवृद्धेति**। स्वरवैजात्येन भेददर्शनादनुगतप्रत्ययानुरोधेन तत्रापि डित्थत्वादिजातिः। **सर्वत्रेति**। सर्वेषु पदार्थेषु जातिमेव निमित्तं कृत्वा शब्दानां प्रवृत्तेरित्यर्थः। वादिद्वयमतं निष्कृष्याह—**चतुर्विधानामिति**। पूर्वं वैयाकरणानाम्, परं तु मीमांसकानामिति बोध्यम्। नैयायिकास्तु—व्यक्तौ न संकेतः। आनन्त्याद्व्यभिचाराच्च। नापि जातौ व्यक्त्यप्रतीतिप्रसङ्गात्। तस्माज्जात्यादिविशिष्टे सः। न चात्र तौ दोषौ। सामान्यलक्षणया सर्वव्यक्त्युपस्थितौ सर्वत्र संकेतग्रहसौकर्यात्—इत्याहुः। क्षणभङ्गवादिनस्तु—तदितरव्यावृत्तिमेव शब्दार्थमाहुः। गोत्वमगोभिन्नत्वमित्येवं रूपम्॥ **वाचकस्येति**। उपाधिः क्रियावृत्तिर्व्यापारश्चेति पर्यायशब्दाः। मुखे आदौ साधुर्मुख्यः। **यो-**

स साक्षात्संकेतितो जात्यादिर्मुख्योऽर्थस्तत्रास्य शब्दस्य मुख्यो व्यापारो वृत्तिरभिधोच्यते। इदमत्र बोध्यम्—वाचकः शब्दस्त्रिधा—यौगिको रूढो योगरूढश्चेति। यत्रावयवार्थ एव बुध्यते स यौगिकः। यथा—पाचकादितेयादिः। यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बोधः स रूढः। यथा—गोमण्डपादिः। इह गमनमण्डपानकर्तृत्वरूपं योगार्थं विनैव व्यक्तिविशेषगृहविशेषयोरवगमः। यत्र त्ववयवशक्तिविषये समुदायशक्तिरप्यस्ति स योगरूढः। यथा—पङ्कजवक्षोजादिः। पङ्कजशब्दो ह्यवयवशक्त्या पङ्कजनिकर्तृरूपमर्थं बोधयति, समुदायशक्त्या तु पद्मत्वेन रूपेण पद्ममिति योगार्थसत्त्वेऽपि व्यक्तिविशेषबोधनाद्योगरूढ एवासाविति।

लाक्षणिकनिरूपणाय तदुपाधिमाह—

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया॥ ४॥**

'कलिङ्गः साहसिकः' इत्यादौ देशविशेषादिरूपार्थानां साहसाद्यसंभवात् 'गङ्गायां घोषः प्रतिवसति' इत्यादौ प्रवाहादिरूपार्थानां घोषाधारत्वाद्यसंभवाच्च मुख्यार्थबाधायामाधाराधेयभावादौ सामीप्यादौ च संबन्धे रूढेः प्रयोजनाच्च हेतोर्मुख्येनामुख्योऽन्योऽर्थो यया लक्ष्यते सा लक्षणा नामक्रियावृत्तिरर्थनिष्ठाप्यर्पिता शब्दे। तत्र रूढिः प्रसिद्धिस्तामनुसृत्य

---

**गार्थं विनैवेति**। 'रूढिर्योगमपहरति' इति न्यायात्। पङ्कजं शैवालादि वक्षोजं रोमव्रणादि च लक्षणया बोध्यम्॥ **लाक्षणिकेति**। **मुख्यार्थेति**। मुख्यार्थबाधः, शक्यसंबन्धः, रूढिफलान्यतरच्चेति लक्षणायां हेतुत्रयम्। तत्रादौ मुख्यार्थस्य वाच्यार्थस्य बाधे समन्वयवेलायां स्खलद्गतित्वे सतीत्यर्थः। तेन वाच्यार्थेन सह लक्ष्यस्य योगे संबन्धे सति। **रूढितः प्रयोजनादिति**। विभागपरमेव, न तु स्वरूपनिर्वाहकम्। ल्यब्लोपे वा पञ्चमी। 'रूढिः प्रसिद्धिः' इत्यादि ग्रन्थात्। **कलिङ्ग इति**। साहसस्य चेतनधर्मत्वाद्देशविशेषेऽसंभवः। घोषस्य स्थित्यसंभवादेव न तदाधारो गङ्गा। ननु प्रवाहं प्रत्याय्य गङ्गाशब्दो निवृत्तव्यापारः तत्प्रत्यायितः प्रवाहस्तटं लक्षयतीत्यर्थधर्मो लक्षणा, न तु शब्दधर्मः। ततः 'शब्दो लाक्षणिकः' इति कथम्। तत्राह—**अर्थनिष्ठापीति**। वाच्यधर्मः शब्दे आरोप्यते, तत्प्रतिपादितस्यैवार्थस्य लक्षकत्वादित्यर्थः। [अन्ये तु व्याच-

---

१. अयं पाठः क-पुस्तके पश्चाद्वर्धितः.

तत्संयुक्तपुरुषादिरन्योऽर्थः पूर्वत्र लक्ष्यते। परत्र तु गङ्गागतशैत्यपावनत्वादेस्तटादौ प्रतिपादनं प्रयोजनं तदुद्दिश्य तटादिरन्योऽर्थः । सा चेयं जहत्स्वार्था । 'कुन्ताः प्रविशन्ति' इत्यादावजहत्स्वार्था कुन्तधारिसहितप्रवेशात् 'छत्रिणो गच्छन्ति' इति छत्रिपदस्यैकसार्थवाहित्वे लक्षणा । तत्त्वेन रूपेण छत्रितदन्ययोर्बोधात् । 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र काकपदस्य दध्युपघातकेषु लक्षणा। तेन तन्मात्रस्य बोधनात् । 'सोऽयं देवदत्तः' इत्यादौ जहदजहत्स्वार्था। अत्र तत्कालैतत्कालयोस्त्यागाज्जहत्स्वार्था । पिण्डमात्रस्यात्यागादजहत्स्वार्था च । एवं 'रथो गच्छति' इत्यादौ च । इयमेव भागलक्षणोच्यते ।

अथ प्रयोजनवतीं विभजते—

**स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।**
**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥ ९ ॥**

'कुन्ताः प्रविशन्ति' इत्यादौ कुन्तादिभिः स्वप्रवेशसिद्धये स्वसंबन्धिनः पुरुषा उपस्थाप्यन्ते । एवं 'वेणुर्गायति' इत्यत्र वेणुना स्वगीतिसिद्धये स्ववादकस्य हरेराक्षेपः । मुख्यार्थस्याप्यत्रोपादानादियमुपादानलक्षणा, कुन्तादीनामतिगहनत्वादि फलम् ।

---

क्षते—'सा शब्दस्यार्पिता वृत्तिः स्वाभाविकेतरेश्वरानुद्भाविता वेति ।] **सा चेयमिति** । जहत्स्वार्थौ यामिति द्वितीयान्तान्यपदार्थो बहुव्रीहिः । अत्र 'कर्मणि कुशलः' 'मञ्चाः क्रोशन्ति' इत्यादि चोदाहरणं मृग्यम् । अत्र दर्भग्रहणस्य मुख्यार्थस्य दक्षान्वयतात्पर्ये बाधात्तेन विवेचकत्वसंबन्धात् प्रसिद्धेश्च दक्षो लक्ष्यते । मञ्चशब्देन तद्वर्तिनो लक्ष्यन्ते तेषां क्रोशनासंभवात् । तत्त्वेनैकसार्थवाहित्वेनेत्यर्थः । तेन काकपदेन । उच्यते वेदान्तिभिः ॥ **अथेति** । 'गौरनुबन्ध्यः', 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्युपादानलक्षणां केचिदुदाहरन्ति । एवं चैतद्व्याचक्षते—श्रुत्या प्रतिपादितमनुबन्धनं गोपदार्थस्य जातेर्मम कथं स्यादिति जात्यवच्छेदकतया कथंचित्स्वान्वयसिद्धये व्यक्तिर्लक्ष्यते । 'अभोजी पीनः' इतिवत् पीनत्वान्वयप्रयोजकस्य भोजित्वस्याप्रतीत्या योग्यतामलभमानं वाक्यमन्वयं न बोधयति । तेन तत्सिद्धये रात्रिभोजनं लक्ष्यते । तथा च 'दिवा न भुङ्क्ते' इति मुख्यार्थमुपादायैव तल्लक्षणेत्युभयत्रोपादान

यत्र त्वविनाभावोऽर्थापत्तिर्वा तत्र नेयं लक्षणा रूढिफलयोरभावात् । यथा—'गौरनुबन्ध्यः' इति श्रुतिनोदितमनुबन्धनं मे कथं स्यादिति जात्या व्यक्तिराक्षिप्यते । 'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे' इत्युक्तेः, न तु शब्देनोच्यते । एवं क्रियतामित्यत्र कर्ता, कुर्वित्यत्र कर्म, प्रविश पिण्डीमित्यादौ गृहं, भुङ्क्ष्वेत्यादि च । अविनाभावो ह्याक्षेपः । 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र रात्रिभोजनमर्थापत्त्यैव लभ्यते, न तु लक्ष्यते । असिध्यदर्थदृष्ट्या साधकान्यार्थकल्पनं ह्यर्थापत्तिः ।

'गङ्गायां घोषः' 'मञ्चाः क्रोशन्ति' इत्यादौ तटादीनां घोषाधारत्वादिसिद्धये गङ्गादिशब्दाः स्वार्थं तत्रार्पयन्तीति परोपलक्षणादेषा लक्षणलक्षणा । द्विधा चेयं शुद्धैव, उपचारेणामिश्रत्वात् । सादृश्येन संबन्धेन प्रवृत्तिभेदेन प्रतीतयोरैक्यारोपो वोपचारः ।

**सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा ।**

यत्रारोप्यमाण आरोपविषयश्च स्फुटः सा लक्षणा सारोपा नाम । यथा 'गौर्वाहीकः' इत्यादौ । इह गौरारोप्यमाणः । वाहीक आरोपविषयः । तौ द्वौ व्यक्तौ निर्दिष्टौ । अत्र गोशब्दः साधारणगुणाश्रयणेन परार्थं लक्षयति । तदुक्तम्—

---

लक्षणेति । तान्दूषयितुमाह—**यत्र त्विति** । आक्षिप्यतेऽनुमीयते । जातिर्व्यक्त्याश्रिता जातित्वादित्यनुमानसंभवान्न लक्षणेत्यर्थः । विशेष्यं व्यक्तिमभिधा न गच्छेत् । हेतुमाह—विशेषणे जातौ क्षीणशक्तिरिति । 'नागृहीतविशेषणा बुद्धिर्विशेष्ये चोपजायते' इति विशेषणं प्रत्याय्य विरामात् । शब्दबुद्धिकर्मणां विरम्य व्यापाराभावाच्च ॥ **एवमिति** । कृतिः साश्रया गुणत्वात् । कृतिः सविषया, कृतित्वादित्याक्षेपेणैव कर्तृकर्मणोर्लाभः । प्रविशेत्यत्र गृहमिति । पिण्डीमित्यत्र भुङ्क्ष्वेत्याक्षिप्यते । **पीन इति** । दिवाभुञ्जानस्य पीनत्वं रात्रिभोजनं विनानुपपन्नमित्यनुपपत्त्या रात्रिभोजनं कल्प्यत इति भट्टमते 'रात्रौ भुङ्क्ते' इति शब्दः कल्प्यत इति श्रुतार्थापत्तिवादः । गुरुमते तु तदर्थमात्रमिति दृष्टार्थापत्तिवादः । यत्र दृष्टोऽर्थोऽनुपपद्यमानोऽर्थान्तरं कल्पयति सा दृष्टार्थापत्तिः, सा चात्रासिध्यदर्थेति लक्षिता । लक्षणलक्षणामुदाहरति—**गङ्गायामिति । स्वार्थमिति** । तत्र तटादौ । स्वार्थमात्मानं त्यजन्तीति यावत् । भावप्रधाननिर्देशात् स्वार्थत्वं तत्र कुर्वतीति वा, गङ्गात्वेन तटबोधनादिति भावः ॥ **अत्रेति** । साधारणः सजातीयः । परार्थं वाहीकमेव, न तु वाहीकत्वम् । तस्य वाहीकपदादेव प्राप्तेः गोशब्दोऽत्र मुख्यया वृत्त्या वाहीकशब्देनान्वयमप्राप्नुवञ्जाड्यादिसमानधर्मसंबन्धाद्वाहीकार्थं लक्षयतीत्यर्थः । **तदुक्तमिति** ।

'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता॥'

इति। एवम् 'अमृतं हरिकीर्तनम्' इत्यादौ च।

**विषय्यन्तःकृतेऽन्यस्मिन्सा स्यात्साध्यवसानिका॥ ६॥**

विषयिणारोप्यमाणेनान्यस्मिन्नारोपविषयेऽन्तःकृते निगीर्णे सैव साध्यवसानोच्यते। यथा 'गौरेवायम्' इत्यादौ। गवेह बाहीकोऽन्तर्निगीर्णः। एवम् 'अमृतमेवेदम्' इत्यादौ च। अस्मिन्भेदद्वये सत्यपि भेदे ताद्रूप्यप्रतीतिः सर्वथाभेदावगमश्च फलम्।

**भेदाविमौ च सादृश्यात्संबन्धान्तरतस्तथा।**
**गौणौ शुद्धौ च विज्ञेयौ**

इमावारोपाध्यवसानरूपौ भेदौ सादृश्यात्संबन्धाद्गौणौ। संबन्धान्तरतस्तु शुद्धौ। तत्र गौणौ दर्शितौ। शुद्धौ यथा—'आयुर्घृतम्' 'आयुरेवेदम्' इत्यादौ। अत्र सादृश्यादन्यत्कार्यकारणभावादिसंबन्धान्तरं तत्पूर्वके आरोपाध्यवसाने। एवम् 'हरिभक्तिर्महत्सङ्गः' 'हरिभक्तिरेवायम्' इत्यादौ च अस्मिन्भेदद्वयेऽन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादिफलम्।

क्वचित्तादर्थ्यात्संबन्धादुपचारः। यथा—'इन्द्रार्था स्थूणा इन्द्रः' 'कृष्णसेवार्थो व्यापारः कृष्णसेवा'। अत्रेष्टार्थप्रदत्वम्।

क्वचित्स्वस्वामिभावात्। यथा—'राजसेवको राजा' 'हरिसेवको हरिः'। अत्रानुल्लङ्घ्याज्ञत्वादि।

---

अभिधेयेन साक्षात्संकेतितेनार्थेनाविनाभूता संबद्धा प्रतीतिर्यस्याः सा वृत्तिः। लक्ष्यमाणस्य बाहीकादेः। गुणैर्जाड्याद्यैः। वृत्तेर्लक्षणायाः। अत्र लक्षणायामविनाभावशब्देन संबन्धमात्रमुच्यते, न तु व्याप्तिः। तथात्वे 'मञ्चाः क्रोशन्ति' इत्यत्र लक्षणा न स्यात्। मञ्चपुरुषयोर्मिथोव्याप्यभावात्। साहचर्यनियमो हि व्याप्तिः॥ **विषय्यन्तरिति**। सैव सारोपैव। **अस्मिन्निति**। ताद्रूप्यं गोगतजाड्यादि। **सर्वथेति**। बाहीकत्वाद्यसाधारणधर्मानुपस्थितेरित्यर्थः। **दर्शिताविति**। 'गौर्बाहीकः' 'गौरेवायम्' इत्यत्र गोबाहीकयोः सादृश्यं घृतं कारणम्, तत्कार्यमायुः॥ संबन्धान्तरं प्रपञ्चयति—**क्वचि-**

क्वचिदवयवावयविभावात् । यथा—‘हस्ताग्रे हस्तः’ ‘जगद्विष्णुः’ । अत्र हस्तव्यापारकारि सामर्थ्यादि ।

क्वचित्तात्कर्म्यात् । यथा—‘ब्राह्मणोऽपि तक्षासौ’ ‘ईश्वरोऽपि क्षत्रियोऽसौ’ । अत्र तत्कर्मनैपुण्यम् ।

संकलयति—

**लक्षणा तेन षड्विधा ॥ ७ ॥**

तेनोपादानादिप्रकारेण षोढा फलवती । इहोपादानलक्षणादिषु भेदेष्वाद्याभ्यामर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यौ, मध्याभ्यां रूपकप्रथमातिशयोक्ती, शेषाभ्यां हेत्वलंकारश्च निरूपयिष्येते ।

**व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।**

रूढिलक्षणायां न किंचिद्व्यङ्ग्यम् । फलवत्यां त्वस्ति तत् ।

**तच्च गूढमगूढं वा**

तच्च व्यङ्ग्यम् । तत्र गूढं यथा—

‘उत्कीर्णैरिव चित्रितैरिव नवोद्भिन्नैरिवोद्यद्द्वयः-
　कुन्दे विभ्रमितैरिव स्मरकलाशाणे निशातैरिव ।
मग्नोन्मग्नतयालसैरिव भृशं लावण्यवापीजले
　केयं केलिकलानिधिः सुबल मे चेतो हरत्यङ्गकैः ॥’

अत्रोत्कीर्णादिपदानि तत्सदृशेषु लाक्षणिकानि । तेषां व्यङ्ग्यं निगूढं प्रतीयते । तथा हि—उत्कीर्णैरिति निर्माणसौष्ठवम् । चित्रितैरिति पादादिगतरागादिप्रद्योतः । नवोद्भिन्नैरिति सौकुमार्यम् । उद्यदिति सुवलितत्वम् । स्मरेति हृद्भेदकत्वम् । मग्नेति लावण्याधिक्यमिति गूढमेव ।

---

**दिति । यथा—हस्ताग्र इति ।** कर्मधारयेऽग्रहस्त इत्यत्रावयवेऽग्रमात्रे हस्तोपचारः । जगद्विष्णुरित्यत्र विष्णुवज्जगतोऽपि सत्यत्वं फलम् ॥ एवमुपादानादिकृतं प्रकारषट्कमापाद्य व्यञ्जनकृतं प्रकारत्रयमाह—**व्यङ्ग्येनेति । तच्चेति ।** सहृदयमात्रवेद्यं गूढम् । काव्यभावनापरिपक्वधियः सहृदयाः । सहृदयासहृदयवेद्यमगूढम् । **उत्कीर्णैरिति ।** आराद्राधां वीक्ष्य कृष्णः सुबलमाह । अत्र मुख्यार्थबाधादुत्कीर्णादिसादृश्यं लक्ष्यम् । **गोप्य**

अगूढं यथा—

'गोप्यस्तपः किमचरन्यदमुष्य रूपं
लावण्यसारमसमोर्ध्वमनन्यसिद्धम् ।
दृग्भिः पिबन्त्यनुसवाभिनवं दुराप-
मेकान्तधाम यशसः श्रिय ऐश्वरस्य ॥'

अत्र दृग्भिः पानस्यासंभवात्सादरावलोको लक्ष्यते। गाढासक्तिर्व्यङ्ग्या। सा च वाच्यवत्प्रतीतेरगूढा ।

**तदेषा कथिता त्रिधा ॥ ८ ॥**

अव्यङ्ग्या गूढव्यङ्ग्यागूढव्यङ्ग्या चेति लक्षणा नाम वृत्तिस्त्रिधा ।

एवमुपाधिमुक्त्वा तदाश्रयमाह—

**तद्भूर्लाक्षणिकः**

शब्द इति संबध्यते । तद्भूर्लक्षणाश्रयः शब्दो लाक्षणिकः कथ्यते ।

अथ व्यञ्जकं निरूपयितुं तदुपाधिमुद्दिशति—

**तत्र व्यापारो व्यञ्जनात्मकः ।**

तत्र लाक्षणिके शब्दे व्यङ्ग्यबोधके सतीत्यर्थः ।

सा च लक्षितान्यैः—

'विरतावभिधादीनां ययार्थो बोध्यते परः ।
सा वृत्तिर्व्यञ्जना नाम शब्दादीनां निगद्यते ॥'

इति । द्वेधा चैषा—शाब्दी आर्थी चेति । शाब्दी द्वेधा—अभिधालक्षणामूलत्वात् ।

---

**इति** । मथुराद्युक्तिः । असमोर्ध्वं समाभ्यधिकरहितम् । अनन्यसिद्धं स्वतःसिद्धम् ॥ **तदेषेति** । तत्तस्मात् । एवं लक्षणां निरूप्य लाक्षणिकमाह—**तद्भूरिति** । स्याद्वाचक इत्यतः शब्द इत्यनुवर्तनीयमित्याह—**शब्द इति** । शब्दादीनामित्यादिपदादर्थादेर्ग्रहः । प्राथम्यादुपजीव्यत्वाच्च यद्यप्यभिधामूलैवादौ वक्तुं युक्ता, तथापि लक्षणामूलोच्यते । प्रसङ्गात्सुप्रसिद्धेश्चेत्यर्थः । यस्य पावनादिफलस्य प्रतीत्यै लक्षणेष्टा तत्फलं लाक्षणिकश-

तत्र प्रसङ्गाल्लक्षणामूला निरूप्यते—

**यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥ ९ ॥**
**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।**

फलं प्रतिपादयितुं यत्र लाक्षणिकशब्दः प्रयुज्यते तत्र नान्यतस्तत्प्रतिपत्तिः, अपि तु तस्मादेव शब्दात्। तत्र वृत्तिर्व्यञ्जनैव।

तथा हि—

**नाभिधा समयाभावात्**

'गङ्गायां घोषः' इत्यादौ शैत्यादयो धर्मास्तटादौ प्रतीयन्ते, तत्र गङ्गादिशब्दानां नाभिधा संकेताभावात्।

**हेत्वभावान्न लक्षणा ॥ १० ॥**

मुख्यार्थबाधः, शक्यसंबन्धः, रूढिफलान्यतरच्चेति लक्षणाया हेतुस्तदभावान्न सा।

तमुपपादयति—

**लक्ष्यं न मुख्यं नाप्यत्र बाधा योगः फलेन नो।**
**न प्रयोजनमेतस्मिन्न च शब्दः स्खलद्गतिः ॥ ११ ॥**

गङ्गाशब्दस्य प्रवाहो मुख्योऽर्थस्तत्र बाधः, तस्य तीरेण संबन्धः। लक्षिते च तीरे शैत्यादि फलमिति गङ्गाशब्देन तीरं लक्ष्यते। एवं चेत्तीरमपि मुख्यं स्यात्, तत्र च बाधा भवेत्। तीरस्य च शैत्यादिना संबन्धः स्यात्। फले च तस्मिल्लक्षिते फलमन्यद्भवेत्। तदा फलमपि तेन लक्ष्येत। न चैतत्किमप्यस्तीति। न च गङ्गाशब्दस्तीरमिव शैत्यादि बोधयितुं मन्थरः। लक्षणया तीरप्रत्ययानन्तरमेव झटित्येव व्यञ्जनया तत्प्रत्ययात्। तस्माद्विवक्षितान्वयानुपपत्त्यभावाच्च फले न लक्षणा।

---

ब्दादेव गम्यम्, न तु प्रमाणान्तरात्। व्याप्तिस्मृत्यादेरनपेक्षणात्। **नाभिधेति**। सा हि संकेतग्रहसहायैवोपयुज्यते, न स्वरूपसतीत्यर्थः। **तमिति**। हेत्वभावमित्यर्थः। न च शब्दः स्खलद्गतिरिति व्याचष्टे—**न च गङ्गाशब्दस्तीरमिवेति**। स्खलन्ती मुख्यार्थबाधाद्यनुसंधानेन विलम्बमाना गतिर्बोधकता यस्य। न चैवं प्रयोजने। अत्र हेतुर्लक्षणयेत्यादि। **तस्मादिति**। पावनत्वाद्यन्वयो विवक्षितस्तदनुपपत्तिर्नास्ति, व्यञ्जनयैव

**एवमप्यनवस्था स्याद्या मूलक्षतिकारिणी ।**

एवमपीति । फलं चेल्लक्ष्यं तर्हि तदपि फलान्तरेण तदपि तदन्तरेणेत्येवं मूलभूतफललक्षणा क्षतिरित्यर्थः ।

ननु शैत्यादिधर्मविशिष्टमेव तीरं लक्षणीयम्, ततः किं व्यञ्जनयेति चेत्तत्राह—

**प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥ १२ ॥**

कस्मादित्याह—

**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।**

प्रत्यक्षादेर्हि ज्ञानस्य शुक्त्यादिर्विषयः, फलं तु ज्ञातता, हानोपादानधीर्वा । विषयो ज्ञानस्य हेतुः, फलं तु तस्य कार्यमिति युगपदप्रतीतेर्न सह लक्ष्यतेत्यनुशयः । यत्तूक्तम्—तीरं शैत्यादि च लक्षणयैव बोधयेत् इति, तन्न । शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात् ।

**विशिष्टे लक्षणा नैवं**

एवमुक्तयुक्त्या ।

**विशेषाः स्युस्तु लक्षिते ॥ १३ ॥**

लक्षिते तीरादौ विशेषाः शैत्यादयस्ते च व्यञ्जनयैव गम्याः स्युः ।

तथाहि—गङ्गाशब्दः पूर्वमभिधया प्रवाहं प्रत्याययति । इतरथा मुख्यार्थबाधो न स्यात् । तद्विरतौ लक्षणया तीरम्, तद्विरतौ व्यञ्जनया पावनत्वादीति । वाक्यार्थबोधनाय तात्पर्याख्या वृत्तिः, साप्यत्र नादृता । वाक्यं विनाप्येकस्य पदस्य पदांशस्य च व्यञ्जकत्वेन ध्वनिकाव्यत्वाङ्गी-

---

तत्सिद्धेः । अतो न फले लक्षणेत्यर्थः । **एवमिति** । तदन्तरेण । फलान्तरेणेत्यर्थः । **युगपदिति** । हेतुफलयोस्तीरप्रतीतिशैत्यप्रतीत्योः कालभेदादेकव्यापारविषयत्वमसुन्दरमिति व्यञ्जनासिद्धिरित्याशयः । **यत्त्विति** । लक्षणयैव तीरं बोधयित्वा शैत्यादि बोधयतु, ततः किं व्यञ्जनयेत्यर्थः । परिहरति—**तन्नेति** । तत्र हेतुः—**शब्दबुद्धीति** । वाचकस्य लाक्षणिकस्य वा शब्दस्याभिधया लक्षणया वा सकृच्छाब्दबोधमुत्पाद्य पुनरभिधया लक्षणया वार्थान्तरबोधने सामर्थ्याभावादित्यर्थः । **तथाहीति** । शैत्यादीनां व्यञ्जनागम्यत्वं दर्शयतीत्यर्थः । **वाक्यार्थेति** । अन्वयबोधनेनोपक्षीणा तात्पर्यवृत्तिर्व्य-

क्तेः । तस्माद्व्यञ्जना नाम चतुर्थी वृत्तिर्ध्वननद्योतनादिपर्यायावश्यमन्वेष्टव्यैवेति ।

ये त्वाहुः—इषुवेगवदभिधाव्यापारो दीर्घदीर्घतरस्तेन सर्वोऽप्यर्थो वाच्यः इति, तन्मते गङ्गायां घोषान्वयानुपपत्तेर्मुख्यार्थबाधादभिधैव नास्ति। कुतस्तस्या दीर्घदीर्घतरत्वम्, येन तटोऽपि बोध्यः। किमिति तैर्लक्षणोपास्या, तेनैव तदर्थसिद्धेः। किमिति च 'ब्राह्मण पुत्रस्ते जातः कन्या ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम् ।

किं च वाच्यार्थव्यङ्ग्यार्थयोः 'त्वदङ्घ्रिमूलं भजतां मुकुन्द' इत्यादौ निन्दास्तुतिरूपेण स्वरूपस्य, 'गतोऽस्तमर्कः' इत्यादौ वाच्य एकरूपो व्यङ्ग्यस्तु तत्तत्प्रतिपन्नादिभेदाद्बहुविध इति संख्यायाः, वाच्यः शब्दोच्चारणमात्रेण वेद्यः स तु तथापि तथाविधप्रतिभानैर्मल्यादिना चेति निमित्तस्य, शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसंघट्टनाश्रयत्वेन चाश्रयस्य, प्रतीतिमात्रचमत्कारयोः करणात्कार्यस्य,

'कस्य वा न भवेत्कोपः क्षतं वीक्ष्य प्रियाधरे ।
आघ्रातभृङ्गवत्पद्मे पद्मे दुःखं सहाधुना ॥'

इति सखी तत्कान्तगतत्वेन विषयस्य, पदतदर्थमात्रनिपुणैः सुहृदपैरेव च वेद्यतया प्रतिपत्तुः, केवलरूपतया चमत्कारितया च प्रतीतेः । पूर्वपश्चाद्भावेन कालस्य च भेदः ।

तथा वाचकव्यञ्जकयोरप्यर्थापेक्षानपेक्षाभ्यां लक्ष्याद्भेदस्तु पूर्वमुक्तः ।

---

ङ्ग्यबोधनाय नालमिति च बोध्यम् । **ये त्वाहुरिति** । यथा बलिष्ठप्रेरित इषुरेकेनैव वेगाख्यव्यापारेण शत्रोः कवचभेदमुरश्छेदं प्राणापहारं च करोति, तथा शब्द एकेनैव शक्तिव्यापारेण पदार्थस्मृतिं वाक्यार्थबुद्धिं व्यङ्ग्यप्रतीतिं च विधत्त इति व्यङ्ग्यस्य वाच्यत्वमित्यर्थः । **तेनैवेति** । अभिधादैर्घ्येणैव लक्ष्यार्थसिद्धेरित्यर्थः । अत्र वाच्यव्यङ्ग्ययोर्वाचकव्यञ्जकयोश्च वैलक्षण्यं दर्शयति—**किं चेत्यादिना** । स्वरूपस्येत्यादीनां नवानां षष्ठ्यन्तानां भेद इत्यनेन संबन्धः । **कस्य वेति** । पत्या तर्ज्यमानां पद्मां प्रति तत्सखीवाक्यम् । दुःखं पतिगञ्जनरूपम् । सखी नायिका वाच्यार्थस्य विषयः । इयं भृङ्गेण दष्टा न तु परेण पुंसेति व्यङ्ग्यस्य विषयस्तु तत्कान्तो गृहपतिरित्यर्थः । गृहीतसंकेतं सन्तमर्थं वाचको बोधयतीति तस्यार्थापेक्षा । असदेव पावनत्वादिकं तीरे बोधय-

न चानुमानं व्यङ्ग्यस्य बोधकम् । तत्परम्परायामनेकानुमानकल्पने गौरवात् ।

तथा हि—

'मनस्तव मनस्विन्या मलिनं न वपुस्तथा ।
यत्पादनखराः कृष्णं श्लिष्यन्ति प्रतिबिम्बितम् ॥'

अत्र पादनखरा इति मानादावृतसर्वाङ्गत्वं मुद्रितनेत्रत्वं च । अन्यथा पादोपान्तगतकृष्णवीक्षासहिष्णुत्वोपपत्तेः । पश्चात्सखीवचसा सत्वरं पादसंवृतिश्च । ततो मानशैथिल्यम् । कृष्णस्य च प्रणयजविनयमहिम्ना पादान्तिकमुपेत्यापि तत्स्पर्शाक्षमत्वम् । सख्याश्च तत्पक्षपातित्वं स्वसखीमानहानिसाग्रहत्वं चेत्यादीनि वस्तून्यनेकानुमानैः साध्यानीति गौरवम् । व्यञ्जनावादिनस्त्वेकयैव व्यञ्जनयेति लाघवात्सैव श्रेयसीति ।

अथाभिधामूला व्यञ्जना दर्श्यते—

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥ १४ ॥**

आद्यशब्दाद्वियोगादयः ।

तदुक्तम्—

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥

---

तीति व्यञ्जकस्य नार्थापेक्षा । पूर्वं 'ज्ञानस्य विषयो ह्यन्यः' इत्यत्र । **न चानुमानमिति** । यत्रैकस्मिन्नेव वाक्ये उत्तरङ्गवद्बहवोऽर्था व्यज्यन्ते, तत्र तावतामनुमानानां कल्पने ग्रन्थगौरवापत्तिर्धीगौरवं चेत्यर्थः । **मनस्तवेति** । मानवतीं श्रीराधां प्रति कृष्णपक्षपातिनी सख्याह । अत्र पादनखरा इत्युक्तेस्तदितराङ्गानां वाससावृत्तिर्व्यज्यते मुद्रितनेत्रत्वं चेति । अन्यथा प्रणामाय चरणोपान्तगते कृष्णे तद्वीक्षां सा न सहेत तस्मादुत्थायान्यत्र व्रजेदिति बोध्यम् । प्रतिबिम्बितं श्लिष्यन्तीत्यनेन विनयवशात्पादप्रान्तं गतस्यापि कृष्णस्य मानभङ्गाद्विना पादस्पर्शाक्षमत्वं ध्वन्यते । **अभिधामूलेति** । अनेकार्थस्यानेकाभिधानशक्तेः । वाचकत्वमभिधा । नियन्त्रिते नियमिते एकतरमात्रस्मरणानुकूलतां नीते सति । **तदुक्तमिति** । संयोगः प्रसिद्धयोगः । विप्रयोगः प्रसिद्धसंबन्धविरहः, विभागरूपो गुणो वा । साहचर्यं सहचरता । विरोधिता बाध्यबाधकत्व, सहानवस्थानं च । अर्थः फलमनन्यसाध्यम् । प्रकरणं वक्तृश्रोतृबुद्धिस्थत्वम् । लिङ्गं

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥'

इति । संनिधिरैकार्थ्यम् । औचिती योग्यता । व्यक्तिः पुंनपुंसकादिः । अनवच्छेदे संशये ।

क्रमेणोदाहरणानि—

'सकौस्तुभो भाति विधुः शेते विधुरकौस्तुभः ।' अत्र कौस्तुभसंयोगवियोगाभ्यां विष्णौ विधुशब्दस्याभिधा नियम्यते ।

'रामलक्ष्मणयोः कीर्तिः' इति साहचर्येण रामशब्दस्य दाशरथौ ।

'कर्णार्जुनकृतो रणः' इति विरोधितयार्जुनशब्दस्य गाण्डीविनि ।

'स्थाणुः कृष्णागुणामोदी' इति गुणामोदरूपार्थस्य वृक्षखण्डेऽसंभवात्तेन स्थाणुशब्दस्य शिवे ।

'देवो जानाति मे मनः' इति प्रकरणाद्देवशब्दस्य युष्मदर्थे ।

'राधिकां बाधते नाथ कुपितो मकरध्वजः ।' इति कोपलिङ्गेन मकरध्वजशब्दस्य कामे ।

'कृष्णोऽयं मुनिवर्योऽस्ति' इति मुनिवर्यशब्दसांनिध्यात्कृष्णशब्दस्य श्रीव्यासे ।

'प्रमत्तो मधुना पिकः' इति मदविधानसामर्थ्यान्मधुशब्दस्य वसन्ते ।

'प्रमत्ता मधुना रामा' इति तद्विधानयोग्यत्वान्माध्वीके च ।

---

संयोगान्यसंबन्धेन परपक्षव्यावृत्तो धर्मः । शब्दस्याव्यभिचरितस्य । संनिधिः सामानाधिकरण्यम् । इदमेवैकार्थ्यमिति वृत्तिकृता व्याख्यातम् । समानमेकमधिकरणमर्थ इति तौल्यात् । सामर्थ्यं तत्करणनियमः । देशकालौ तद्विशेषौ । स्वर उदात्तादिः । **विष्णाविति ।** कौस्तुभसंयोगस्य विष्णावेव प्रसिद्धेरनेकार्थस्यापि विधुशब्दस्य तस्मिन्नेवाभिधा नियम्यते । अन्यविधुपदार्थे तत्संयोगाभावात् । वियोगस्तादृशसंबन्धाभावः । तेनापि तत्रैव सा नियम्यते । अभावस्य प्रतियोगिपूर्वकत्वात् । गाण्डीविनीति बाध्यबाधकतायाम् । सहानवस्थाने तु 'छायातपौ' इति बोध्यम् । छायाशब्दोऽत्रातपाभावे । **कुपितो मकरध्वज इति ।** मकराकारध्वजसमुद्राभ्यां व्यावृत्तेन समवायसंबन्धवता कोपेन मकरध्वजशब्दस्याभिधा कामे नियम्यते । पिकमदं वसन्तः करोति, रामामदं तु माध्वीति तथोदाहृतम् ।

